नमो नमो निम्मल दंसणस्स

पंचम गणधर श्री सुधर्मास्वामिने नमः

# ३१ गणिविद्या-प्रकिर्णकंसूत्रम्

सच्छायं

## (अष्टमं-प्रकिर्णकम्)

मू. (१) वुच्छं बलाबलविहिं नवबलविहिमुत्तमं विउपसत्थं ।
जिनवयनभासियमिणं पवयणसत्थम्मि जह दिट्ठं ॥

छा. वक्ष्ये बलाबलविधिं नवबलविध्युत्तमं विद्वत्प्रशस्तं ।
जिनवचनभाषितमिमं प्रवचनशास्त्र यथा दृष्टम् ॥

मू. (२) दिवस १ तिही २ नक्खत्ता ३ करण ४ ग्गहदिवसया ५ मुहुत्तं च ६ ॥
सउणबलं ७ लग्गबलं ८ निमित्तबल ९ मुत्तमंचावि ॥

छा. दिवसाः १ तिथयो २ नक्षत्राणि ३ करणानि ४ ग्रहदिवसाः ५ मुहूर्त्त च ।
६ शकुनबलं ७ लग्नबलं ८ निमित्तबल ९ मुत्तममपि च ॥

मू. (३) होराबलिआ दिवसा जुण्हा पुण दुब्बला उभयपक्ख ।
विवरीयं राईसु य बलाबलविहिं वियाणाहि ॥

छा. होराबलिका दिवसा ज्योत्सना पुनर्दुर्बला उभयपक्षयोः ।
विपरीतं रात्रिषु च बलाबलविधिं विजानीहि

मू. (४) पाडिवए पडिवत्ती नत्थि विवत्ती भणंति बीआए ।
तइयाए अत्थसिद्धी विजयग्गा पंचमी भणिया ॥

छा. प्रतिपदि प्रतिपत्तिर्नास्ति द्वितीयायां विपत्तिं भणन्ति ।
तृतीयायामर्थसिद्धिं विजयाग्रा पञ्चमी भणिता ॥

मू. (५) जा एस सत्तमी सा उ बहुगुणा इत्थ संसओ नत्थि ।
दसमीइ पत्थियाणं भवंति निक्कंटया पंथा ॥

छा. यैषा सप्तमी सा तु बहुगुणाऽत्र संशयो नास्ति ।
दशम्यां प्रस्थितानां भवन्ति निष्कण्टकाः पन्थानः ॥

मू. (६) आरुग्गमविग्घं खेमियं च इक्कारसिं वियाणाहि ।
जेऽवि हु हुंति अमित्ता ते तेरसि पिट्ठओ जिणइ ॥

छा. आरोग्यमविघ्नं क्षेमं चैकादश्यां विजानीहि ।
यान्यपि च भवन्त्यमित्राणि तानि त्रयोदश्यां पृष्ठतो जयति (प्रस्थाता) ॥

मू. (७) चाउद्दसिं पन्नरसिं वजिज्ञा अट्ठमिं च नवमिं च।
छट्ठिं चउत्थिं बारसिं घ दुण्हंपि पक्खाणं ॥
छा. चतुर्दशीं पूर्णिमां वर्जयेदष्टमीं च नवमीं च।
षष्ठीं चतुर्थीं द्वादशीं च द्वयोरपि पक्षयोः ॥
मू. (८) पढमीपंचमि दसमी पन्नरसिक्कारसीविय तहेव।
एएसु य दिवसेसुं सेहे निक्खमणं करे ॥
छा. प्रतिपत् पञ्चमी दशमी पूर्णिमैकादश्यपि च तथैव।
एतेषु च दिवसेषु शिष्यो निष्क्रमणं कुर्यात् ॥
मू. (९) नंदा भद्दा विजया उच्छा पुन्ना य पंचमी होइ।
मासेण य छव्वारे इक्किक्का वत्तए नियए ॥
छा. नन्दा भद्रा विजया तुच्छा पूर्णा च पञ्चमी भवति।
मासेन च षड्वारा एकैकाऽऽवर्त्तते नियताः ॥
मू. (१०) नंदे जए य पुन्ने, सेहनिक्खमणं करे।
नंदे भद्दे सुभद्दाये, पुन्ने अणसणं करे ॥
छा. नन्दायां जयायां पूर्णायां च शैक्षस्य निष्क्रमणं कुर्यात्।
नन्दायां भद्रायां च मण्डयेत् पूर्णायां चानशनं कुर्यात् ॥
मू. (११) पुस्सऽस्सिणिमिगसिररेवई य हत्थो तहेव चित्ता य।
अनुराहजिट्ठमूला नव नक्खत्ता गमणसिद्धा ॥
छा. पुष्योऽश्विनी मृगशिरो रेवती च हस्तस्तथैव चित्रा च।
अनुराधा ज्येष्ठा मूलं नव नक्षत्राणि गमनसिद्धानि ॥
मू. (१२) मिगसिर महा य मूलो विसाहा तहेव होइ अनुराहा।
हत्थुत्तररेवइ असिण्णी य सवणे य नक्खत्ते ॥
छा. मृगशिरो मघा च मूलं विशाखा तथैव भवत्यनुराधा।
हस्तोत्तरा रेवती अश्विनी च श्रवणं च नक्षत्राणि ॥
मू. (१३) एएसु य अद्धाणं पत्थाणं ठाणयं च कायव्वं।
जइ य गहुत्थं न चिट्ठइ संझामुक्कं च जइ होइ ॥
छा. एतेषु चाध्वा प्रस्थानमं स्थानं च कर्त्तव्यम्।
यदि च ग्रहणमत्र न तिष्ठति सन्ध्यामुक्तं च यदि भवति ॥
मू. (१४) उप्पन्नभत्तपाणो अद्धाणम्मि सया उ जो होइ।
फलपुप्फोवगवेओ गओवि खेमेण सो एइ ॥
छा. उत्पन्नभक्तपानोऽध्वनि सदा तु यो भवति।
फलपुष्पोपगोपेतः (फलपुष्पाणि गौरिव) गतोऽपि क्षेमेण स एति ॥
मू. (१५) संझागयं रविगयं विड्डेरं सग्गहं विलंबिं च।
राहुगयं गहभिन्नं च वज्जए सव्वनक्खत्ते ॥

छा. सन्ध्यागतं रविगतं विड्वेरं सग्रहं विलम्बि च ।
राहुगतं ग्रहभिन्नं वर्जयेत्सर्वनक्षत्रेषु ॥

मू. (१६) अत्थमणे संझाय रविगय जहियं ठिओ उ आइच्चो ।
विड्डेरमवद्दारिय सग्गह कूरग्गहठियं तु ॥

छा. अस्तमयेन सन्ध्यागतं यत्र तु आदित्यः स्थितस्तद्रविगतम् ।
अवदीर्णं विड्वेरं क्रूरग्रहस्थितिमत् सग्रहम् ॥

मू. (१७) आइच्चपिट्ठओ से विलंबि राहूहयं जहिं गहणं ।
मज्झेण गहो जस्स उ गच्छइ तं होइ गहभिन्नं ॥

छा. आदित्यपृष्ठतः यत् तद्विलम्बि, यत्र ग्रहणं तद्राहुहतम् ।
यस्य मध्येन ग्रहो गच्छति तद् भवति ग्रहभिन्नम् ॥

मू. (१८) संज्झागयम्मि कलहो होइ विवाओ विलंबिनक्खत्ते ।
विड्डेरे परविजओ आइच्चगए अनिव्वाणी ॥

छा. सन्ध्यागते कलहः भवति विवादो विलम्बिनक्षत्रे ।
विड्वेरे परविजयः आदित्यगते अनिर्वाणी (परमदुःखम्) ॥

मू. (१९) जं सग्गहम्मि कीरइ नक्खत्ते तत्थ निग्गहो होई ।
राहुहयम्मि य मरणं गहभिन्ने सोणिउग्गाले ॥

छा. यत् सग्रहे क्रियते नक्षत्रे तत्र निग्रहो भवति ।
राहुहते च मरणं ग्रहभिन्ने शोणितोद्गारः ॥

मू. (२०) संझागयं राहुगयं आइच्चगयं च दुब्बलं रिक्खं ।
संझाइचउविमुक्कं गहमुक्कं चेव बलियाइं ॥

छा. सन्ध्यागतं राहुगतमादित्यगतं च दुर्बलमृक्षम् ।
सन्ध्यादिचतुर्विमुक्तं ग्रहमुक्तं चैव बलिष्ठानि ॥

मू. (२१) पुस्सो हत्थो अभीई य, अस्सिणी भरणी तहा ।
एएसु य रिक्खेसुं, पाओवगमणं करे ॥

छा. पुष्यो हस्तोऽभिजिदश्विनी भरणी तथा ।
एतेषु च नक्षत्रेषु पादपोपगमनं कुर्यात् ॥

मू. (२२) सवणेण धणिट्ठाइ पुणव्वसू नवि करिज्ज निक्खमणं ।
सयभिसयपूसधंमे (हत्थे) विज्जारंभे पवित्तिज्जा ॥

छा. श्रवणे धनिष्ठायां पुनर्वसौ नैव कुर्यान्निष्क्रमणम् ।
शतभिष- कपुष्यहस्तेषु विद्यारम्भं प्रवर्तयेत् ॥

मू. (२३) मिगसिर अद्दा पुस्सो तिन्नि य पुव्वाइं मूल मस्सेसा ।
हत्थो चित्ता य तहा दस वुड्ढिकराइं नाणस्स ॥

छा. मृगशिर आर्द्रा पुष्यं तिस्रश्च पूर्वा मूलमश्लेषा ।
हस्तश्चित्रा च तथा दश वृद्धिकराणि ज्ञानस्य ॥

मू. (२४) हत्थाइं पंच रिक्खा वत्थस्स पसत्थगा विनिद्दिट्ठा ।
उत्तरा तिन्नि धनिट्ठा पुनव्वसू रोहिणी पुस्सो ॥

छा. हस्तादि पञ्च रिक्ता वस्त्रस्य प्रशस्तका निर्दिष्टा
उत्तरा त्रिणि धनिष्ठा पुनर्वसु रोहिणी पुष्यः ॥

मू. (२५) पुनव्वसूणा पुस्सेण, सवणेण धणिट्ठया ।
एएहिं चउरिक्खेहिं, लोयकम्माणि कारए ॥

छा. पुनर्वसौ पुष्ये श्रवणे धनिष्ठायाम् ।
एतेषु चतुर्षु नक्षत्रेषु लोचकर्म कारयेत् ॥

मू. (२६) कित्तियाहिं विसाहाहिं, महाहिं भरणीहिं य ।
एएहिं चउरिक्खेहिं, लोयकम्माणि वज्जए ॥

छा. कृत्तिकायां विशाखायां मघायां भरणी च ।
एतेषु चतुर्षु नक्षत्रेषु लोचकर्म वर्जयेत् ॥

मू. (२७) तिहिं उत्तराहिं रोहिणीहिं कुज्जा उ सेहनिक्खमणं ।
सेहोवट्ठावणं कुज्जा, अणुन्ना गणिवायए ॥

छा. त्रिषूत्तरासु रोहिण्यां च कुर्यात् शैक्षस्य निष्क्रमणम् ।
शैक्षोपस्थापनं कुर्यात् अनुज्ञां गणिवाचकयोः ॥

मू. (२८) गणसंगहणं कुज्जा, गणहरं चेव ठावए ।
उग्गहं वसहिं ठाणं, थावराणि पवत्तए ॥

छा. गणसंग्रहं कुर्यात् गणधरं चैव स्थापयेत् उवग्रहंवसतिं
स्थानं च स्थावराणि प्रवर्त्तयेत् ॥

मू. (२९) पुस्सो हत्थो अभिइ, अस्सिणी य तहेव य ।
चत्तारि क्खिप्पकारीणी, कज्जारंभेसु सोहणा ॥

छा. पुष्यो हस्तोऽभिजित् अश्विनी च तथैव च ।
चत्वारि क्षिप्रकर्तणि कार्यारम्भेषु ॥

मू. (३०) विज्जाणं धारणं कुज्जा, बंभजोगे य साहए ।
सज्झायं च अणुन्नं च, उद्देसे य समुद्दिसे ॥

छा. विद्यानां धारणं कुर्यात् ब्रह्मयोगांश्च साधयेत् ।
स्वाध्यायं चानुज्ञां उद्देशं च समुद्देशम् ॥

मू. (३१) अनुराहा रेवई चेव, चित्ता मिगसिरं तहा ।
मिऊनियाणि चत्तारि, मिउकम्मं तेसु कारए ॥

छा. अनुराधा रेवती चैव चित्रा मृगशिरस्तथा ।
मृदून्येतानि चत्वारि मृदुकर्म तेषु कारयेत् ॥

मू. (३२) भिक्खाचरणमत्ताणं, कुज्जा गहणधारणं ।
संगहोवग्गहं चेव, बालवुड्ढाण कारए ॥

छा. भिक्षाचरणमार्त्तानां कुर्याद् ग्रहणधारणम् ।
सङ्ग्रहोपग्रहं चैव बालवृद्धानां कुर्यात् ॥

मू. (३३) अद्दा अस्सेस जिट्ठा य, मूलो चेव चउत्थओ ।
गुरुणो कारए पडिमं, तवोकम्मं च कारए ॥

छा. आर्द्राऽश्लेषा ज्येष्ठा मूलं चैव चतुर्थम् ।
गुरोः कारयेत् प्रतिमां तपःकर्म च कारयेत् ॥

मू. (३४) दिव्वमाणुसतेरिच्छे, उवसग्गाहियासए ।
गुरु सुवरणकरणो, उग्गहोवग्गहं करे ॥

छा. दिव्यमानुष्यतैरश्चान् उपसर्गानध्यासीत ।
गुरु चरणसुक- रणयोरुद्रहोपग्रहं कुर्यात् ॥

मू. (३५) महा भरणिपुव्वाणि, तिन्नि उग्गा वियाहिया ।
एएसु तवं कुञ्जा, सब्भिंतरबाहिरं चेव ॥

छा. मघा भरणी पूर्वाणि त्रीणि उग्राणि व्याख्यातानि ।
एतेषु तपः कुर्यात् साभ्यन्तरबाह्यम् ॥

मू. (३६) तिन्नि सयाणि सट्ठाणि, तवोकम्माणि आहिया ।
उग्गनक्खत्तजोएसिं, तेसुमन्नंतरे करे ॥

छा. त्रीणि शतानिट षष्ठानि तपःकर्माण्याख्यातानि ।
उग्रनक्षत्रयोगेषु तेषामन्यतरत् कुर्यात् ॥

मू. (३७) कित्तिया य विसाहा य, उम्हा एयाणि दुन्नि उ ।
लिंपणं सीवणं कुञ्जा, संथारुग्गहधारणं ॥

छा. कृत्तिका विशाखा च उष्णे एते द्वे तु । लेपनं सीवन
कुर्यात्संस्ता- रोपग्रहधारणम् सीवनं कुर्यात्संस्तारोपग्रहधारणम् ॥

मू. (३८) उवकरणभंडमाईणं, विवायं चीवराणि य ॥
उवगरणं विभागं च, आयरियाणं तु कारए ॥

छा. उपकरणभाण्डादीनां विवादं चीवराणि च ।
उपकरणं विभागं च आचार्यं कारयेत् ॥

मू. (३९) धनिट्ठा सयभिसा साई, सवणो य पुनव्वसू ।
एएसु गुरु सुस्सूसं, चेइयाणं च पूयणं ॥

छा. धनिष्ठा शतभिषक् स्वाति श्रवणं च पुनर्वसुः
एतेषु गुरुशुश्रूषां चैत्यानां च पूजनम् ॥

मू. (४०) सज्झायकरणं कुञ्जा, विज्जारय(विरइं च) कारए ।
वओवट्ठावणं कुञ्जा, अणुन्नं गणिवायए ॥

छा. स्वाध्यायकरणं कुर्यात् विद्यां विरतिं च कारयेत् ।
व्रतोपस्थापनं कुर्यात् अनुज्ञां गणिवाचकयोः ॥

मू. (४१) गणसंगहणं कुज्जा, सेहनिक्खमणं करे ।
संगहोवग्गहं कुज्जा, गणावच्छेइयं तहा ॥

छा. गणसंग्रहण कुर्यात् शैक्षनिष्क्रमणं कुर्यात् सङ्ग्रहोपग्रहं
कुर्याद् गणावच्छेदिकतां तथा ॥

मू. (४२) बव १ बालवं य २ तह कोलवं च ३ थीलोयणं ४ गराइं च ५ ।
वणियं ६ विट्ठी य तहा ७ सुद्धपडिवए निसाईया ॥

छा. बवं बालवं य तथा कोलवं च स्त्रीलोचनं गरादि च ।
वणिक् विष्टिश्च तथा शुक्लप्रतिपन्निशादिकानि ॥

मू. (४३) सउणि चउप्पय नागं किंथुग्घं च करणा धुवा हुंति ।
किण्हचउद्दसरत्तिं सउणी पडिवज्जए करणं ॥

छा. शकुनिश्चतुष्पदं नागं किंस्तुघ्नं च करणानि ध्रुवाणि भवन्ति ।
कृ.ष्ण चतुर्दशीरात्री शकुनि प्रतिपद्यते करणम् ॥

मू. (४४) काऊण तिहिं बिऊणं जुण्हगे सोहए न पुण काले ।
सत्तहिं हरिज्ज भागं सेसं जं तं भवे करणं ॥

छा. कृत्वा तिथिं द्विगुणां ज्योत्स्ने शोधयेत् न पुनः कृष्णे ।
सप्तभिर्हरेद् भागं शेषं यत्तद् भवेत्करणम् ॥

मू. (४५) बवे य बालवे चेव, कोलवे वणिए तहा ।
नागे चउप्पए यावि, सेहनिक्खमणं करे ॥

छा. बवेश्च बालवे चैव कौलवे वणिजि तथा ।
नागे चतुष्पदे चापि शैक्षनिष्क्रमणं कुर्यात् ॥

मू. (४६) बवे उवट्ठावणं कुज्जा, अणुन्नं गणिवायए ।
सउणींमि य विट्ठीए, अनसनं तत्थ कारए ॥

छा. बवे व्रतोपस्थापनं कुर्याद् अनुज्ञां गणिवाचकयोः ।
शकुनौ च विष्टौ अनशनं तत्र कारयेत् ॥

मू. (४७) गुरुसुक्कसोमदिवसे, सेहनिक्खमणं करे ।
वओवट्ठावणं कुज्जा, अणुन्नं गणिवायए ॥

छा. गुरुशुक्रसोमदिवसेषु शैक्षनिष्क्रमणं कुर्यात् ।
व्रतोपस्थापनं कुर्याद् अनुज्ञां गणिवाचकयोः ॥

मू. (४८) (र)विभोमकोण(ड)दिवसे, चरणकरणानिकारए ।
तवोकम्माणि कारिज्जा, पाओवगमणाणि य ॥

छा. रविभौमक्रौड (शनि) दिवसे चरणकरणानि कुर्यात् ।
तपःकर्माणि कारयेत् पादपोपगमनानि च ॥

मू. (४९) रुद्दोउ मुहुत्ताणं आई छन्नवइअंगुलच्छाओ ।
सेओ उ हवइ सट्ठी बारसमित्तो हवइ जुत्तो ॥

छा. रुद्रस्तु मुहूर्तानामादि षन्नवत्यङ्गुलच्छायः ।
श्रेयांस्तु भवति षष्टिर्द्वादश मित्रो भवति युक्तः ॥

मू. (५०) छच्चेव य आरभडो सोमित्तो पंचअंगुलो होइ ।
चत्तारि य वइरिओ दुच्चेव य सावसू होइ ॥

छा. षट् चैवारभटः सौमित्रः पञ्चाङ्गुलो भवति ।
चत्वारि च वैरेयः (वायव्यः) द्वावेव च सवसुः (सुप्रतीतः) भवति ॥

मू. (५१) परिमंडलो मुहुत्तो असीवि मज्झंतिते ठिए होइ ।
दो होइ रोहणो पुनबलो य चउरंगुलो होइ ॥

छा. परिमण्डलो मुहूर्तोऽसिरपि मध्याह्ने स्थिते भवति ।
द्वौ भवति रोहणः पुनर्बलश्च चतुरङ्गुलो भवति ॥

मू. (५२) विजउ पंचंगुलिओ छच्चेव य नेरिओ हवइ जुत्तो ।
वरुणो य हवइ बारस अज्जमदीवा हवइ सट्ठी ॥

छा. विजयः पञ्चाङ्गुलिकः षट् नैव नैऋतो भवति युक्तः ।
वरुणश्च भवति द्वादश अर्यमद्वीपौ भवतः षष्टिः ॥

मू. (५३) छन्नउइ अंगहुलाइं पुन होइ मगो सूरअत्थ मणवेले ।
एए दिवस मुहुत्ता रत्ति मुहुत्ते अहोवुच्छं ॥

छा. षन्नवतिरङ्गुलानि पुनः भवति भगः सूर्य अस्तमनवेला ।
एते दिवस मुहूर्ता रात्रिमुहूर्ता अतः उर्ध्वं ॥

मू. (५४) हवइं विवरीय धणो पमोयणो अज्जमा तहासीणां ।
रक्खस पायावच्चा सामा बंभा बहस्सइय ॥

छा. भवति विपरीत धन्न प्रमोचनो अर्यमा तथासीनः
राक्षस पायावच्चा सामा ब्रह्मा बृहस्पति य ॥

मू. (५५) विण्हु तहा पुण रित्तो रत्तिमुहुत्ता वियाहिया ।
दिवसमुहुत्तगईए छायामाणं मुणेयव्वं ॥

छा. विष्णु तथा पुनः रिक्तःरात्रि मुहूर्त्ताश्च व्याख्याताः ।
दिवसमुहूर्त्तगत्या छायामानं ज्ञातव्यम् ॥

मू. (५६) मित्ते नंदे तह सुट्ठिए य, अभिई चंदे तहेव या ।
वरुणग्गिवेसईसाणे आणंदे विजए इय ॥

छा. मित्रे (३) नन्दे (१६) तथा सुस्थे (५) च अभि जिति (७) चन्द्रे (६) ।
वारुणा (१५) ग्निवेश्ययोः (२२) ईशाने (११) आनन्दे (१६) विजये (१७) इति ॥

मू. (५७) एएसु मुहुत्तजोएसु, सेहनिक्खमणं करे ।
वउवट्ठावणाई च, अणुन्ना गणिवायए ॥

छा. एतेषु मुहूर्त्तयोगेषु शैक्षनिष्क्रमणं कुर्यात् ।
व्रतोपस्थापनानि च अनुज्ञां गणिवाचकयोः ॥

मू. (५८) बंभे वलए वाउम्मि उसभे वरुण तहा।
अनसनपाउवगमणं, उत्तमट्ठं च कारए ॥

छा. ब्रह्मणि (९) वलये (८) वायौ (३) वृषभे (२८) वरुणे (१५) तथा।
अनशनपादोपगमने उत्तमार्थं च कारयेत् ॥

मू. (५९) पुन्नामधिज्जसउणेसु, सेहनिक्खमणं करे।
थीनामेसु सउणेसु, समाहिं कारए विऊ ॥

छा. पुंनामधेयशकुनेषु शैक्षनिष्क्रमणं कुर्यात्।
स्त्रीनामसु शकुनेषु समाधिं कारयेद् विद्वान् ॥

मू. (६०) नपुंसएसु सउणेसु, सव्वकम्माणि वज्जए
वामिस्सेसु निमित्तेसु, सव्वारंभाणि वज्जए ॥

छा. नपुंसकेषु शकुनेषु सर्वकर्माणि वर्जयेत्।
व्यामिश्रेषु निमित्तेषु सर्वारम्भान् वर्जयेत् ॥

मू. (६१) तिरियं वाहरंतेसु, अद्धाणागमणं करे।
पुप्फियफलिए वच्छे, सज्झायं करणं करे ॥

छा. तिर्यग् व्याहरत्सु अध्वगमनं कुर्यात्।
पुष्पितफलिते वृक्षे स्वाध्यायं क्रियां च कुर्यात् ॥

मू. (६२) दुमखंधे वाहरंतेसु, सेहुवट्ठावणं करे।
गयणे वाहरंतेसु, उत्तमट्ठं तु कारए ॥

छा. द्रुमस्कन्धेषु व्याहरत्सु शैक्षोपस्थापनं कुर्यात्।
गगने व्याहरत्सु उत्तमार्थं तु कारयेत् ॥

मू. (६३) बिलमूले वाहरंतेसु, ठाणं तु परिगिण्हए।
उप्पायम्मि वयंतेसु, सउणेसु मरणं भवे ॥

छा. बिलमूले व्याहरत्सु स्थानं तु परिगृह्णीयात्।
उत्पाते व्रजत्सु शकुनेषु मरणं भवेत् ॥

मू. (६४) पक्कमंतेसु सउणेसु, हरिसं तुट्ठिं च वागरे।
चलरासिविलग्गेसु, सेहनिक्खमणं करे ॥

छा. प्रकाम्यत्सु शकुनेषु हर्षं तुष्टिं च व्याकु- र्यात्।
चलराशिविलग्नेषु शैक्षनिष्क्रमणं कुर्यात् ॥

मू. (६५) थिररासिविलग्गेसु, वओवट्ठावणं करे।
सुयक्खंधाणुन्नाओ, उद्दिसे य समुद्दिसे ॥

छा. स्थिरराशिविलग्नेषु व्रतोपस्थापनं कुर्यात्।
श्रुतस्कन्धानुज्ञा उद्देशांश्च समुद्देशान् ॥

मू. (६६) बिसरीरविलग्गेसु, सज्झायकरणं करे।
रविहोराविलग्गेसु, सेहनिक्खमणं करे ॥

छा. द्विशरीरविलग्नेषु स्वाध्यायकरणं कुर्यात् ।
रविहोराविलग्नेषु शैक्षनिष्क्रमणं कुर्यात् ॥

मू. (६७) चंदहोराविलग्गेसु, सेहीणं संगहं करे ।
सुम्मदिक्कोणलग्गेसु, चरणकरणं तु कारए ॥

छा. चन्द्रहोराविलग्नेषु शैक्षाणां सङ्ग्रहं कुर्यात् ।
सौम्यदिक्कोणलग्नेषु चरणकरणं तु कारयेत् ॥

मू. (६८) कूणदिक्कोणलग्गेसु, उत्तमट्ठं तु कारए ।
एवं लग्गाणि जाणिज्ञ, दिक्कोणेसु न संसओ ॥

छा. कूणदिक्कोणलग्नेषु उत्तमार्थं तु कारयेत् ।
एवं लग्नानि जानीयात् दिक्कोणेषु न संशयः ॥

मू. (६९) सोमग्गहविलग्गेसु, सेहनिक्खमणं करे ।
कूरग्गहविग्गेसु, उत्तमट्ठं तु कारए ॥

छा. सोमग्रहविलग्नेषु शैक्षनिष्क्रमणं कुर्यात् ।
क्रूरग्रहविलग्नेषु उत्तमार्थं तु कारयेत् ॥

मू. (७०) राहुकेउविलग्गेसु सव्वकम्माणि वज्जए ।
विलग्गेसु पसत्थेसु, पसत्थाणि उ आरभे ॥

छा. राहुकेतुविलग्नेषु सर्वकर्माणि वर्जयेत् ।
विलग्नेषु प्रशस्तेषु प्रशस्तानि तु आरभेत् ॥

मू. (७१) अप्पसत्थेसु लग्गेसु, सव्वकम्माणि वज्जए ।
विलग्गाणि जाणिज्ञा, गहाण जिनभासिए ॥

छा. अप्रशस्तेषु लग्नेषु सर्वकर्माणि वर्जयेत् ।
विलग्नानि जानीयाद् ग्रहाणां जिनभाषिते ॥

मू. (७२) न निमित्ता विवज्जंति, न मिच्छा रिसिभासियं ।
दुद्दिट्ठेणं निमित्तेणं, आदेसो उ विनस्सइ ॥

छा. न निमित्ताद् विपद्यन्ते न मिथ्या ऋषिभाषितम् ।
दुर्दिष्टेन निमित्तेन आदेशस्तु विनश्यति ॥

मू. (७३) सुदिट्ठेण निमित्तेणं, आदेसो न विनस्सइ ।
जाय उप्पाइया भासा, जं च जंपंति बालया ॥

छा. सुदृष्टेन निमित्तेन आदेशः न विनश्यति ।
या चोत्पातिकी भाषा यच्च जल्पन्ति बालकाः ॥

मू. (७४) जं वित्थीओ पभासंति, नत्थि तस्स वइक्कमो ।
तज्जाएण य तज्जायं, तन्निभेण य तन्निभं ॥

छा. यच्चापि स्त्रियः प्रभाषन्ते नास्ति तस्य व्यतिक्रमः ।
तज्जातेन च तज्जातं तन्निभेन च तन्निभम् ॥

मू. (७५) तारूवेण य तारूवं, सरिसं सरिसेण निद्दिसे ।
थीपुरिसनिमित्तेसु, सेहनिक्खमणं करे ॥

छा. ताद्रूप्येण च ताद्रूप्यं सदृशं सदृशेन निर्दिशेत् ।
स्त्रीपुरुषनिमित्तेषु शैक्षनिष्क्रमणं कुर्यात् ॥

मू. (७६) नपुंसकनिमित्तेसु, सव्वकज्जाणि वज्जए ।
वामिस्सेसु निमित्तेसु, सव्वारंभे विवज्जए ॥

छा. नपुंसकनिमित्तेषु सर्वकार्याणि वर्जयेत् ।
व्यामिश्रेषु निमित्तेषु सर्वारम्भान् विवर्जयेत् ॥

मू. (७७) निमित्ते कित्तिमे नत्थि, निमित्ते भावि सुज्झए ।
जेण सिद्धा वियाणंति, निमित्तुप्पायलक्खणं ॥

छा. निमिले कृत्रिमता नास्ति निमित्तं भावि दर्शयेत् ।
येन सिद्धा विजानन्ति निमित्तोत्पालक्षणम् ॥

मू. (७८) निमित्तेसु पसत्थेसु, दढेसु बलिएसु य ।
सेहनिक्खमणं कुज्जा, वउवट्ठावणाणि य ॥

छा. निमित्तेषु प्रशस्तेषु दृढेषु बलिकेषु च ।
शैक्षनिष्क्रमणं कुर्याद् व्रतोपस्थापनानि च ॥

मू. (७९) गणसंगहणं कुज्जा गणहर इत्थ वा वए ।
सुयक्खंधाणुन्नाओ अणुन्ना गणिवायए ॥

छा. गणसङ्ग्रहणं कुर्यात् गणधरोऽत्र वा व्रजेत् ।
श्रुतस्कन्धानुज्ञामनुज्ञां गणिवाचकयोः ॥

मू. (८०) निमित्तेसुऽपसत्थेसु, सिढिलेसुऽबलेसु य ।
सव्वकज्जाणि वज्जिज्जा, अप्पसाहरणं करे ॥

छा. निमित्तेष्वप्रशस्तेषु श्लथेष्वबलेषु च ।
सर्वकार्याणि वर्जयेत् आत्मसंधारणं कुर्यात् ॥

मू. (८१) पसत्थेसु निमित्तेसु, पसत्थाणि सयारभे ।
अप्पसत्थनिमित्तेसु, सव्वकज्जाणि वज्जए ॥

छा. प्रशस्तेषु निमित्तेषु प्रशस्तानि सदाऽऽरभेत् ।
अप्रशस्तनिमित्तेषु सर्वकार्याणि वर्जयेत् ॥

मू. (८२) दिवसाओतिही बलिओ तिहीउ बलियं तु सुव्वई रिक्खं ।
नक्खत्ता करणमाहंसु करणाउ गहदिणा बलिणो ॥

छा. दिवसात्तिथिर्बलीयान् तिथेर्बलीयस्तु श्रूयते ऋक्षम् ।
नक्षत्रात्करणमाहुः करणाद् ग्रहदिना बलिनः ॥

मू. (८३) गहदिणा उ मुहुत्ता, मुहुत्ता, मुहुत्ता सउणो बली ।
सउणाओ बलवं लग्गं, तओ निमित्तं पहाणं तु ॥

छा. ग्रहदिनेभ्यो मुहूर्तो मुहूर्ताच्छकुनो बली ।
शकुनाद्बलवल्लग्नं ततो निमित्तं प्रधानं तु ॥

मू. (८४) विलग्गाओ निमित्ताओ, निमित्तबलमुत्तमं ।
न तं संविज्जए लोए, निमित्ता जं बलं भवे ॥

छा. विलग्नान्निमित्तान्निमित्तबलमुत्तमम् ।
न छिद्यते लोके निमित्ताद् बलवद् भवेत् ॥

मू. (८५) एसो बलाबलविही समासओ किसिओ सुविहिएहिं ।
अनुओगनाणगज्झो नायव्वो अप्पमत्तेहिं ॥

छा. एष बलाबलविधि समासतः कीर्तितः सुविहितैः ।
अनुयोगज्ञानग्राह्यो ज्ञातव्योऽप्रमत्तैः ॥

## ३१ | अष्टमं प्रकीर्णकम् – गणिविद्या – समासम्

**मुनि दीपरत्नसागरेण संशोधिता सम्पादिता गणिविद्याप्रकीर्णकस्य पूज्यपाद आनन्दसागरसूरीश्वरेण सम्पादिता संस्कृतछाया समासम् ।**

